वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥६॥

किंच वेदान्तजनितविज्ञानं वेदान्तविज्ञानं तस्यार्थः पर आत्मा विज्ञेयः, सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च संन्यासयोगात्सर्वकर्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठास्वरूपाद्योगात् यतयो यतनशीलाः, शुद्धसत्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां ये मरणकालास्ते अपरान्ताः तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालः तस्मिन्परान्तकाले साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवत् दृश्यते प्राप्यते च । अतो बहुवचनं ब्रह्मलोकेष्विति, ब्रह्मणीत्यर्थः । परामृताः परममृतममरणधर्मकं ब्रह्म आत्मभूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः, परामृताः सन्तः परिमुच्यन्ति परि समंतात्प्रदीपनिर्वाणवत् भिन्नघटाकाशवच्च निवृत्तिमुपयान्ति । परिमुच्यन्ते परि समंतान्मुच्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते । "शकुनीनामिवाकाशे जले वारिचरस्य च । पदं यथा न दृश्येत तथा ज्ञानवतां गतिः ॥" "अनध्वगा अध्वसु पारयिष्णवः" इति श्रुतिस्मृतिभ्याम् । देशपरिच्छिन्ना हि गतिः संसारविषयैव । परिच्छिन्नसाधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गंतव्यम् । यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्तद्रव्यवदाद्यंतवदन्याश्रितं सावयवमनित्यं कृतकं च स्यात् । न त्वेवंविधं ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता । अपि चाविद्यादिसंसारबंधापनयमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्यभूतम् ॥

गताः कलाः पंचदश प्रतिष्ठा
देवाश्च सर्वे प्रति देवतासु ।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकीभवन्ति ॥७॥

किंच मोक्षकाले या देहारंभिकाः कलाः प्राणाद्याः ताः स्वां स्वां प्रतिष्ठां गताः स्वं स्वं कारणं गता भवन्तीत्यर्थः । प्रतिष्ठा इति द्वितीयाबहुवचनम् ।

पंचदश पंचदशसंख्याका या अंत्यप्रश्नपरिपठिताः प्रसिद्धा, देवाश्च देहाश्रया-श्चक्षुरादिकरणस्थाः सर्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थः। यानि च मुमुक्षुणा कृतानि कर्माण्यप्रवृत्तफलानि प्रवृत्तफलानामुपभोगेनैव क्षीयमाणत्वात्। विज्ञानमयश्चात्मा अविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु कर्मणां तत्फलार्थत्वात्सह तेनैव विज्ञानमयेनात्मना। अतो विज्ञानमयो विज्ञानप्रायः। त एते कर्माणि विज्ञानमयश्चात्मा उपाध्यपनये सति परेऽव्ययेऽनंतेऽक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनंतरेऽबाह्येऽद्वये शिवे शान्ते सर्वे एकीभवन्ति अविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाद्याधारापनय इव सूर्यादिप्रतिबिंबाः सूर्ये घटाद्यपनय इवाकाशे घटाद्याकाशाः।

> यथा नद्यः स्यंदमानाः समुद्रेऽ-
> स्तं गच्छन्ति नामरूपे विहाय।
> तथा विद्वान्नामरूपाद्विमुक्तः
> परात्परं पुरुषमुपैति दिव्यम् ॥८॥

किंच यथा नद्यो गंगाद्याः स्यंदमाना गच्छन्त्यः समुद्रे समुद्रं प्राप्यास्तं अदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति, नाम च रूपं च नामरूपे विहाय हित्वा, तथा अविद्याकृतनामरूपाद्विमुक्तः सन्विद्वान्परादक्षरात्पूर्वोक्तात्परं दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥

> स यो ह वै तत्परमं ब्रह्म वेद
> ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति।
> तरति शोकं तरति पाप्मानं
> गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवति ॥९॥

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धाः। अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छति न ब्रह्मैव। न। विद्ययैव सर्वप्रतिबंधस्यापनीतत्वात्। अविद्याप्रतिबंधमात्रो हि मोक्षो नान्यप्रतिबंधः। नित्यत्वादात्मभूतत्वाच्च। तस्मात्स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद साक्षादहमेवास्मीति जानाति स नान्यां गतिं गच्छति। देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम्। आत्मा ह्येषां स भवति। तस्माद्ब्रह्म विद्वान् ब्रह्मैव भवति। किंच नास्य विदुषोऽब्रह्मवित्कुले भवति। किंच तरति शोकं

अनेकेष्वैकल्यानिमित्तं मानसं संतापं जीवन्नेवातिक्रान्तो भवति। तरति पाप्मानं धर्माधर्माख्यं गुहाग्रंथिभ्यो हृदयाविद्याग्रंथिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव 'भिद्यते हृदयग्रंथिः' इत्यादि ॥

तदेतदृचाऽभ्युक्तम्—

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः।
तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥१०॥

अथेदानीं ब्रह्मविद्यासंप्रदानविध्युपप्रदर्शनेनोपसंहारः क्रियते। तदेतद्विद्यासंप्रदानविधानमृचा मंत्रेणाभ्युक्तमभिप्रकाशितम्। क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः। श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्यभियुक्ताः परमब्रह्म बुभुत्सवः स्वयमेकर्षिं एकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये, तेषां एव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम्। यथा अथर्वणानां वेदव्रतं प्रसिद्धम्। यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव वदेत ॥

तदेतत्सत्यमृषिरंगिराः पुरोवाच नैतदचीर्णव्रतोऽधीते।
नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥११॥

इति तृतीयमुंडके द्वितीयः खंडः ॥

ॐ भद्रं कर्णेभिरिति शान्तिः।

इत्यथर्ववेदीया मुंडकोपनिषत्समाप्ता ॥

तदेतदक्षरं पुरुषं सत्यं ऋषिरंगिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच। तद्वदन्योऽपि तथैव श्रेयोर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः। नैतत् ग्रंथरूपं अचीर्णव्रतोऽचरितव्रतोऽप्यधीते न पठति। चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति। समाप्ता ब्रह्मविद्या। सा येभ्यो ब्रह्मादिभ्यः पारंपर्यक्रमेण संप्राप्ता तेभ्यो नमः परमऋषिभ्यः। परमं ब्रह्म साक्षात् दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयः तेभ्यो भूयोऽपि नमः। द्विर्वचनमत्यादरार्थं मुंडकसमाप्त्यर्थं च ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ अथर्वणमुंडकोपनिषद्भाष्यं समाप्तम् ॥



# प्रतीकानुक्रमणिका ।

---